॥ श्रीधर्मशास्तुः अष्टोत्तरशतनामस्तोत्रम् ॥

श्री पूर्णापुष्कलाम्बासमेत श्री हरिहरपुत्रस्वामिने नमः ॥

ध्यानम् ॥

कल्हारोज्वल नीलकुन्तलभरं कालांबुद श्यामलं
कर्पूराकलिताभिराम वपुषं कान्तेन्दुबिम्बाननं ।
श्री दण्डाङ्कुश-पाश-शूल विलसत्पाणिं मदान्त-
द्विपारूढं शत्रुविमर्दनं हृदि महा शास्तारं आद्यं भजे ॥

महाशास्ता महादेवो महादेवसुतोऽव्ययः ।
लोककर्ता लोकभर्ता लोकहर्तापरात्परः ॥ १
त्रिलोकरक्षको धन्वी तपस्वी भूतसैनिकः ।
मन्त्रवेदी महावेदी मारुतो जगदीश्वरः ॥ २
लोकाध्यक्षोऽग्रणीः श्रीमानप्रमेयपराक्रमः ।
सिम्हारूढो गजारूढो हयारूढो महेश्वरः ॥ ३
नानाशस्त्रधरोऽनर्घो नानाविद्याविशारदः ।
नानारूपधरो वीरो नानाप्राणिनिषेवितः ॥ ४
भूतेशो भूतितो भृत्यो भुजङ्गाभरणोज्वलः ।
इक्षुधन्वी पुष्पबाणो महारूपो महाप्रभुः ॥ ५
मायादेवीसुतो मान्यो महनीयो महागुणः ।
महाशैवो महारुद्रो वैष्णवो विष्णुपूजकः ॥ ६
विघ्नेशो वीरभद्रेशो भैरवो षण्मुखप्रियः ।
मेरुशृङ्गसमासीनो मुनिसंघनिषेवितः ॥ ७
वेदो भद्रो जगन्नाथो गणनाथो गणेश्वरः ।
महायोगी महामायी महाज्ञानी महास्थिरः ॥ ८
वेदशास्ता भूतशास्ता भीमहासपराक्रमः ।
नागहारो नागकेशो व्योमकेशः सनातनः ॥ ९
सगुणो निर्गुणो नित्यो नित्यतृप्तो निराश्रयः ।
लोकाश्रयो गणाधीशश्चतुषष्टिकलामयः ॥ १०
ऋग्यजुःसामथर्वात्मा मल्लकासुरभञ्जनः ।
त्रिमूर्ति दैत्यमथनः प्रकृतिः पुरुषोत्तमः ॥ ११
कालज्ञानी महाज्ञानी कामदः कमलेक्षणः ।
कल्पवृक्षो महावृक्षो विद्यावृक्षो विभूतिदः ॥ १२
संसारतापविच्छेत्ता पशुलोकभयङ्करः ।
रोगहन्ता प्राणदाता परगर्वविभञ्जनः ॥ १३
सर्वशास्त्रार्थ तत्वज्ञो नीतिमान् पापभञ्जनः ।

पुष्कलापूर्णासंयुक्तः परमात्मा सतांगतिः ॥ १४
अनन्तादित्यसङ्काशः सुब्रह्मण्यानुजो बली ।
भक्तानुकंपी देवेशो भगवान् भक्तवत्सलः ॥

इति श्री धर्मशास्तुः अष्टोत्तरशतनामस्तोत्रं सम्पूर्णं ॥